||ॐ नमो भगवते वासुदेवाय||

# श्रीकृष्णकृपामूर्तिश्रीमदभयचरणारविन्दभक्तिवेदान्तस्वामिप्रभुपादतात्पर्यसहिता श्रीमद्भगवद्गीता यथारूपम्

## अथ प्रथमोऽध्यायः

## कुरुक्षेत्रे युद्धभूमौ सैन्यनिरीक्षणम्

धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः|

मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय||१||

धृतराष्ट्रः उवाच— राजा धृतराष्ट्रोऽब्रवीत्; धर्म+क्षेत्रे— तीर्थे; कुरुक्षेत्रे— कुरुक्षेत्रनामके स्थाने; समवेताः— सम्मिलिताः; युयुत्सवः— योद्धुमिच्छन्तः; मामकाः— मम पक्षः (पुत्राः); पाण्डवाः— पाण्डुपुत्राः; च— अपि; एव— हि; किमकुर्वत— किं कृतवन्तः; सञ्जय— हे सञ्जय|

धृतराष्ट्र उवाच— हे सञ्जय! धर्मक्षेत्रे कुरुक्षेत्रे योद्धुमिच्छन्तो मत्पुत्राः पाण्डुपुत्राश्च मिलित्वा किमकुर्वत?

तात्पर्यम्— भगवद्गीता नाम बह्वधीयमानमीश्वरवादविज्ञानमेव गीतामहात्म्ये च संक्षेपेण कथितम्| तत्रोक्तं यत् स्वार्थप्रेरितव्याख्यानानि हित्वा श्रीकृष्णभक्तसहायतयैव संवीक्षणपूर्वकं भगवद्गीताध्येया तदुपदेशबोधार्थं प्रयतनीयं चेति| भगवद्गीतायामेव विशदबोधस्योदाहरणं दृश्यते साक्षाद्भगवतः श्रृण्वतोऽर्जुनस्योपदेशबोधप्रकारे| यदि स्वार्थप्रेरितव्याख्यानानि विना कोऽपि तद्गुरुशिष्यपरम्पराद्वारेण भगवद्गीताबोधार्थमेतावान् सुभगो भवति तर्हि स समस्तस्वाध्यायस्य सर्वेषां च विश्वशास्त्राणां पारं गच्छति| विभिन्नशास्त्रेषु यत् किमप्यन्तर्भूतं तत् सर्वं भगवद्गीतायां प्राप्यते| अत्र तु पठिष्यतान्यत्राप्राप्तविषया अपि लप्स्यन्ते| इदमेव गीताया वैशिष्ट्यम्| साक्षात् भगवता श्रीकृष्णेनोक्तत्वादेषा गीता पूर्णमीश्वरवादविज्ञानमेव|

महाभारते वर्णिता धृतराष्ट्रसञ्जयसंवादविषया एतस्य महादर्शनस्य मूलरूपेण सन्तिष्ठन्ते| इदं दर्शनं स्मरणातीतवैदिकयुगप्रभृतितीर्थभूते कुरुक्षेत्रे युद्धभूमावभिव्यक्तं बभूवेत्यनुश्रूयते| पृथिव्यां स्वयं भगवानुपतिष्ठन्मानवतापथप्रदर्शनार्थमिदं प्रोवाच|

अत्र धार्मिकक्रियानुष्ठानस्थानार्थो धर्मक्षेत्रशब्दः साकूत एव कुरुक्षेत्रे युद्धभूमौ श्रीभगवतोऽर्जुनपक्षोपस्थितत्वात्| कुरूणां पिता धृतराष्ट्रो युद्धान्ते स्वपुत्रविजयसम्भवेऽत्यन्तं शङ्कानिमग्नो बभूव| एवम्भूते सन्देहे स स्वसचिवं सञ्जयं पप्रच्छ— मत्पुत्राः पाण्डवाश्च किमकुर्वत इति| तत्पुत्राः स्वानुजपाण्डुपुत्राश्च धर्मभूमौ कुरुक्षेत्रे निर्णयात्मकसंग्रामार्थं समवेता एवेत्यत्र तस्य निश्चय आसीत्| तथापि तस्य जिज्ञासा सार्थका| स भ्रातृपुत्रेषु भ्रातृषु च सन्धिं नैच्छदपि तु युद्धभूमौ स्वपुत्रनियतिविषय आश्वस्तो भवितुमैच्छदेव| कुरुक्षेत्रमन्यत्र वेदेषु स्वर्गीयाणामप्याराधनस्थानमुच्यते तथा तत्रैव युद्धव्यवस्थितत्वाद्धृतराष्ट्रस्तत्परिणामे तत्तीर्थप्रभावादत्यन्तं भयाभिभूत आसीत्| तदर्जुनादिपाण्डवान् प्रत्यनुकूलप्रभावं नयेत्तेषां स्वाभाविकपुण्यात्मत्वादिति स सम्यग् ज्ञातवान्| व्यासशिष्यत्वेन तदनुग्रहात् सञ्जयो धृतराष्ट्रप्रकोष्ठ आसीनोऽपि कुरुक्षेत्रयुद्धभूमिं साक्षीकर्तुं सामर्थ्यं प्राप्तः| एवं सति धृतराष्ट्रो युद्धभूमिस्थितिविषये तं पप्रच्छ|

पाण्डवा धार्तराष्ट्राश्च समवंशीयाः| अत्र तु धृतराष्ट्रमनोभावः प्रकट्यते| स बुद्धिपूर्वं स्वपुत्रानेव कौरवरूपेण घोषयित्वा वंशोत्तराधिकारात् पाण्डवान् वियुक्तवान्| अनेन प्रकारेण भ्रात्रीयैः पाण्डवैः सम्बन्धे धृतराष्ट्रमनोभावविशेषोऽवगन्तुं शक्यते| यथैव धान्यक्षेत्रे व्यर्थाः स्तम्बा निष्कृष्यन्ते तथैवैतद्विषयप्रारम्भादेवापेक्ष्यते यद्यत्र धर्मस्य जनयिता श्रीकृष्ण उपस्थित आसीत्तत्र धर्मक्षेत्रे कुरुक्षेत्रे धृतराष्ट्रपुत्रदुर्योधनादयोऽवाञ्छितस्तम्बा इवोन्मूल्य सर्वथा धार्मिका युधिष्ठरादयो भगवता स्थापिताः स्युरिति धर्मक्षेत्रकुरुक्षेत्रशब्दार्थ एवैतिहासिकस्य वैदिकस्य च महत्त्वादतिरिक्तम्|

सञ्जय उवाच

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा|

आचार्यमुपसङ्गम्य राजा वचनमब्रवीत्||२||

सञ्जयः उवाच— सञ्जयोऽब्रवीत्; दृष्ट्वा— अवलोक्य; तु— किन्तु; पाण्डव+अनीकम्— पाण्डवसैन्यम्; व्यूढम्— व्यूहरचनाम्; दुर्योधनः— राजा दुर्योधनः; तदा— तस्मिन् काले; आचार्यम्— गुरुम्; उपसङ्गम्य— समीपं गत्वा; राजा— नृपः; वचनम्— वाक्यम्; अब्रवीत्— उक्तवान्|

सञ्जय उवाच— हे राजन्! पाण्डवैर्व्यूहरचनया व्यवस्थितां सेनां दृष्ट्वा राजा दुर्योधनः स्वाचार्यमुपसङ्गम्येदं वचनमब्रवीत्|

तात्पर्यम्— अन्धजातो धृतराष्ट्रो दौर्भाग्येनाध्यात्मिकदृष्टिहीनोऽप्यासीत्| स्वपुत्रा धर्मे तथैवान्धा इति स सम्यग् जज्ञौ ततः पुण्यात्मजातैः पाण्डवैस्ते सन्धिं कदाचिन्न प्राप्नुयुरिति तस्य निश्चयः| तदपि स तीर्थप्रभावसन्दिग्ध आसीत् सञ्जयेन च युद्धक्षेत्रस्थितिप्रश्ने तदुद्देश्यं प्रत्येतुमशक्यत| अत एव सञ्जयो निराशं राजानं प्रोत्साहयितुमैच्छद्येन तस्य निश्चयो भवेद्यत्तत्पुत्रास्तत्तीर्थप्रभाववशात् कश्चन सन्धिं न स्वीकुर्युः| अतः सञ्जयो राजानमेवं विज्ञापितवान्— भवत्पुत्रो दुर्योधनः पाण्डवसेनां दृष्ट्वा सद्यः सेनापतिं द्रोणाचार्यं यथार्थस्थितिं विज्ञापयितुं तत्समीपं गत इति| यद्यपि दुर्योधनो राजेत्यत्रोच्यते तथापि स्थितिगौरवात्तेन सेनापतिसमीपं गन्तव्यमेव| अत एव स राजनीतौ सर्वथोपयुक्तः खलु| किन्तु दुर्योधनस्य राजनीतिकव्यवहारस्तद् भयं गोपयितुमशक्त आसीद्यत् पाण्डवव्यूहरचनां दृष्ट्वा तेनानुभूतम्|

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्|

व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता||३||

पश्य— अवलोकस्व; एताम्— इमाम्; पाण्डु+पुत्राणाम्— पाण्डोरात्मजानाम्; आचार्य— हे गुरो; महतीम्— वितताम्; चमूम्— सेनाम्; व्यूढाम्— व्यवस्थिताम्; द्रुपद+पुत्रेण— द्रुपदस्यात्मजेन; तव— भवतः; शिष्येण— छात्रेण; धीमता— अतिबुद्धिमता|

हे आचार्य! तव धीमता शिष्येण द्रुपदपुत्रेण सुकौशलेन व्यवस्थितां पाण्डुपुत्राणां महतीं सेनां पश्य|

तात्पर्यम्— महान् राजनीतिज्ञो दुर्योधनो महासेनापतेर्ब्राह्मणस्य द्रोणाचार्यस्य दोषानुद्देष्टुमैच्छत्| अर्जुनपत्न्या द्रौपद्याः पितुर्नृपस्य द्रुपदस्य द्रोणाचार्यस्य च परस्परं कलहो बभूव| तत्फलतो द्रुपदो महायज्ञमनुतस्थौ येन द्रोणाचार्यवधसमर्थपुत्रलाभरूपं वरं प्राप्तः| एतत् सर्वं सुसम्यग् विद्वानपि द्रुपदपुत्रे धृष्टद्युम्ने युद्धशिक्षार्थं तदर्पिते सति द्रोणाचार्यस्तस्मै समस्तसैनिकरहस्यप्रदानान्नैवोदविजत वदान्यब्राह्मणत्वाद्| द्रोणाचार्यसकाशात्तत्कौशलं शिक्षित्वेदानीं कुरुक्षेत्रयुद्धभूमौ पाण्डवपक्षपातो धृष्टद्युम्नस्तेषां सैन्यव्यूहं व्यवास्थापयत्| दुर्योधनो द्रोणार्चार्यं प्रति तं दोषमुददिशद्येन स युद्धे सावधानः सन्धिहीनश्च तिष्ठेत्| अनेन च स उद्देष्टुमैच्छद्यद्युद्धे द्रोणाचार्यः स्वप्रियशिष्येषु पाण्डवेषु तादृशमौदार्यं न प्रदर्शयेत्| सविशेषमर्जुनस्तस्य प्रेष्ठः प्रतिभाशालितमः शिष्य आसीत्| तादृशमौदार्यं युद्धे पराजयं नयेदेवेत्यपि दुर्योधनः प्रत्यबोधयत्|

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि|

युयुधानो विराटश्च द्रुपदश्च महारथः||४||

अत्र— अस्यां सेनायाम्; शूराः— वीराः; महेष्वासाः— महाधनुर्धराः; भीम+अर्जुन+समाः— भीमस्यार्जुनस्य च समानाः; युधि— संग्रामे; युयुधानः— युयुधानो नाम शूरः; विराटः— विराटो नाम शूरः; च— अपि; द्रुपदः— द्रुपदो नाम राजा; च— अपि; महारथः— महायोधः|

अस्यां सेनायां युद्धे भीमार्जुनसमा युयुधानो विराटो द्रुपदश्चेत्यादि बह्वो महाशूरा धनुर्धराश्च सन्ति|

तात्पर्यम्— यद्यपि द्रोणाचार्ययुद्धकौशलमहाशक्तेः समक्षं धृष्टद्युम्नोऽल्पको बाधक एवासीत्तथाप्यन्ये भयकारिणः| ते विजयमार्गे महाबाधका एवोक्ता दुर्योधनेन तेषु प्रत्येकस्य भीमार्जुनसमशक्तिमत्त्वात्| तथा भीमार्जुनयोर्बलं ज्ञात्वा तेन ताभ्यामन्येऽतोल्यन्त|

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्|

पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः||५||

धृष्टकेतुः— धृष्टकेतुर्नाम शूरः; चेकितानः— चेकितानो नाम राजा; काशिराजः— वाराणस्या राजा; च— अपि; वीर्यवान्— अतिशक्तिशाली; पुरुजित्— पुरुजिन्नाम शूरः; कुन्तिभोजः— कुन्तिभोजो नाम शूरः; च— अपि; शैब्यः— शैब्यो नाम शूरः; च— अपि; नर+पुङ्गवः— नराणां वीरश्रेष्ठः|

अत्र धृष्टकेतुश्चेकितानः काशिराजः पुरुजित् कुन्तिभोजः शैब्यश्चेत्यादयो शौर्यवन्तो वीर्यवन्तो महायोधाः सन्ति|

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्|

सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः||६||

युधामन्युः— युधामन्युर्नाम शूरः; च— अपि; विक्रान्तः— पराक्रमी; उत्तमौजाः— उत्तमौजा नाम शूरः; च— अपि; वीर्यवान्— अतिशक्तिशाली; सौभद्रः— सुभद्रापुत्रः; द्रौपदेयाः— द्रौपदीपुत्राः; च— अपि; सर्वे— समस्ताः; एव— हि; महारथाः— महारथिनः|

अत्र पराक्रमी युधामन्युर्वीर्यवानुत्तमौजाः सौभद्रो द्रौपदेयाश्च| एते सर्वे योधा महारथिन एव|

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम|

नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते||७||

अस्माकम्— अस्मदीयानाम्; तु— किन्तु; विशिष्टाः— विशेषतः शक्तिमन्तः; ये— (नायकाः); तान्— अमून्; निबोध— बुध्यस्व, विज्ञापितो भव; द्विज+उत्तम— हे ब्राह्मणश्रेष्ठ; नायकाः— नेतारः; मम— मदीयानाम्; सैन्यस्य— सेनायाः; संज्ञा+अर्थम्— सूचनार्थम्; तान्— अमून्; ब्रवीमि— वदामि; ते— तुभ्यम्|

हे द्विजोत्तम! तव सूचनार्थं तु ये मम सैन्यं नेतुं विशेषतो योग्यास्त्वां तान् ब्रवीमि|

भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः|

अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च||८||

भवान्— त्वम्; भीष्मः— पितामहो भीष्मः; च— अपि; कर्णः— कर्णो नाम शूरः; च— अपि; कृपः— कृपनामक आचार्यः; च— अपि; समितिञ्जयः— युद्धे सदैव विजयी; अश्वत्थामा— अश्वत्थामा नाम शूरः; विकर्णः— विकर्णो नाम शूरः; च— अपि; सौमदत्तिः— सोमदत्तपुत्रः; तथा— च; एव— हि; च— अपि|

भवान् भीष्मः कर्णः कृपोऽश्वत्थामा विकर्णो भूरिश्रवा नाम सोमदत्तपुत्रश्चेत्यादयः सदैव समितिञ्जयाः|

तात्पर्यम्— अत्र दुर्योधनः सदैव विजयिनो युद्धाद्वितीयवीरानभिदधाति| विकर्णो दुर्योधनस्य भ्राता| अश्वत्थामा द्रोणाचार्यपुत्रः| सौमदत्तिरथवा भूरिश्रवा बाह्लीकराजपुत्रः| कर्णोऽर्जुनस्यार्धभ्रातैव यतः स पाण्डुविवाहात् पूर्वं कुन्तीजातः| कृपाचार्यस्य यमजा भगिनी द्रोणाचार्येण पाणिगृहीता|

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः|

नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः||९||

अन्ये— अपरे; च— अपि; बहवः— अनेके; शूराः— वीराः; मत्+अर्थे— मम प्रयोजनार्थम्; त्यक्त+जीविताः— जीवनत्यागोद्यताः; नाना+शस्त्र+प्रहरणाः— अनेकानि शस्त्राणि प्रहरणसाधनानि येषां ते; सर्वे— समस्ताः; युद्ध+विशारदाः— रणविद्यानिपुणाः|

अन्ये बहवः शूरा मदर्थे जीवनत्यागोद्यताः| ते सर्वे नानाशस्त्रप्रहरणैः सुयुक्ता युद्धविद्यानिपुणाः|

तात्पर्यम्— जयद्रथकृतवर्मशल्याद्यन्यानधिकृत्य ते सर्वे दुर्योधनकृते जीवनत्यागाध्यवसिता एव| अर्थात् कुरुक्षेत्रयुद्धे ते सर्वे मरिष्यन्तीति पूर्वमेव निश्चितं तेषां पापिदुर्योधनपक्षपातत्वात्| निःसंशयं तूपर्युक्तस्वमित्रसंयुक्तशक्तिहेतुना दुर्योधनः स्वविजये विश्वस्त आसीत्|

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्|

पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्||१०||

अपर्याप्तम्— अपरिमेयम्; तत्— अदः; अस्माकम्— अस्मदीयानाम्; बलम्— शक्तिः; भीष्म+अभिरक्षितम्— पितामहेन भीष्मेण सम्पूर्णं पालितम्; पर्याप्तम्— परिमितम्; तु— किन्तु; इदम्— एतत्; एतेषाम्— (पाण्डवानाम्); बलम्— सेना; भीम+अभिरक्षितम्— भीमेन सर्वतः पालितम्|

पितामहेन भीष्मेण सर्वथाभिरक्षितमस्माकं बलमपरिमेयमेव| भीमेन तु सावधानमभिरक्षितं पाण्डवबलं परिमितम्|

तात्पर्यम्— अत्र दुर्योधनस्तुलनात्मकशक्त्यनुमितिं चक्रे| निपुणतमेन सेनापतिना पितामहेन भीष्मेण सविशेषं रक्षिताः स्वस्याः सशस्त्रसेनाशक्तिरपरिमेयैव| प्रत्युत न्यूननिपुणेन भीमेन रक्ष्यमाणा पाण्डवसेना परिमितैव यो भीष्मस्य समक्षं तृणकल्प एवेति मन्यते दुर्योधनः| यद्यहं कदाचिन्म्रियेय तर्हि भीमेनैव हन्येयेति सुष्ठु ज्ञात्वा स सदैव भीमायैर्ष्यत्| तथाप्यत्युत्कृष्टसेनापतिभीष्मोपस्थितत्वात् स स्वविजये विश्वस्त आसीत्| युद्धे विजयी भवितास्मीति निर्णयस्तस्य सम्यक् कृतः खलु|

अयनेषु च सर्वेषु यथाभागमवस्थिताः|

भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि||११||

अयनेषु— व्यूहप्रवेशमार्गेषु; च— अपि; सर्वेषु— सर्वत्र; यथाभागम्— यथास्थानं रचनया; अवस्थिताः— स्थिताः; भीष्मम्— पितामहं भीष्मम्; एव— हि; अभिरक्षन्तु— सहायतां ददतु; भवन्तः— यूयम्; सर्वे— समस्ता यथाक्रमम्; एव हि— अवश्यम्|

अथ भवन्तः सर्वे सैन्यव्यूहस्य स्वस्वायनेषु तिष्ठन्तः पितामहं भीष्मं सर्वथा रक्षन्तु|

तात्पर्यम्— भीष्मशौर्यं प्रशस्य दुर्योधनोऽपरं चामन्यत यदन्ये स्वोपेक्षामनुभवेयुस्तथा च निजराजनीतिकरीत्या स उपर्युक्तशब्दैः स्थितिं समीकर्तुं प्रायतत| असंशयं भीष्मदेवो महिष्ठो वीर एव किन्तु वृद्धः| अत एव सर्वे विशेषतस्तस्य सर्वतो रक्षां ध्यायन्त्विति सोऽद्रढयत्| युद्धे भीष्मे प्रवृत्ते सति शत्रव एकदिश एव तस्य सर्वथा प्रवृत्तत्वाल्लाभं प्राप्नुयुः| ततोऽन्ये वीराः स्वस्वव्यूहायनानि न त्यजेयुर्येन शत्रूणां व्यूहभङ्गावसरो न स्यादित्युपयुक्तमेव| कुरुविजयो भीष्मदेवोपस्थितेरधीन इति दुर्योधनः स्पष्टमनुबभूव| यदा सभायां सर्वमहासेनापतीनां समक्षं बलेन नग्नोपस्थाप्यमानार्जुनपत्नी द्रौपदी तदसहायावस्थायां भीष्मद्रोणौ न्यायं प्रार्थयत तदा तावेकं शब्दमपि नोक्तवन्ताविति सम्यग् जानन् दुर्योधनो युद्धे तयोः सम्पूर्णाधारे विश्वसिति स्म| सेनापत्योः पाण्डवेषु स्नेहविशेषं जानन्नपि स आशंसत यदिदानीं तौ तं सर्वथा त्यजेतां यथैव द्यूतक्रीडावसरे|

तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः|

सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान्||१२||

तस्य— अमुष्य; सञ्जनयन्— वर्धयन्; हर्षम्— आह्लादम्; कुरु+वृद्धः— कुरुवंशस्य वयोवृद्धः; पितामहः— पितॄणां पिता (भीष्मः); सिंह+नादम्— सिंहगर्जनमिव शब्दम्; विनद्य— ध्वनित्वा; उच्चैः— महास्वरेण; शंखम्— कम्बुम्; दध्मौ— वादितवान्; प्रतापवान्— बलवान्|

तदा दुर्योधनस्य हर्षं सञ्जनयन् प्रतापवान् योधानां पितामहः कुरुवृद्धो भीष्मः सिंहनादमिव विनद्य शंखमुच्चैर्दध्मौ|

तात्पर्यम्— स्वपौत्रमनोभावार्थं प्रत्येत्य कुरुवृद्धेनात्यन्तमुच्चैः शंखं धमता तं हर्षयितुं प्रयतितं स्वाभाविकदयया| तच्च तस्य सिंहवत्पदोपयुक्तमेव| असाक्षात्तु शंखरूपेण सङ्केतेन स हताशं पौत्रं दुर्योधनं विज्ञापितवान् यत् संग्रामे त्वज्जयाशा नैव स्यादन्यपक्षे भगवत्कृष्णोपस्थितत्वादिति| तदपि युद्धनिर्देशस्तत्कर्तव्यमेवासीद्यस्मान्नोद्विजेत् सः|

ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः|

सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्||१३||

ततः— तत्पश्चात्; शंखाः— कम्बवः; च— अपि; भेर्यः— बृहत्पटहाः; च— अपि; पणव+आनक+गोमुखाः— दुन्दुभिमृदङ्गकालहसदृषवाद्यविशेषाः; सहसा— अकस्मात्; एव— हि; अभ्यहन्यन्त— युगपद्वादिताः; सः— असौ; शब्दः— समवेतस्वरः; तुमुलः— कोलाहलपूर्णः; अभवत्— अभूत्|

ततः शंखा भेर्यः पणवा आनका गोमुखाश्च सहसैवाभ्यहन्यन्त स च शब्दस्तुमुलोऽभवत्|

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ|

माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः||१४||

ततः— तत्पश्चात्; श्वेतैः— धवलैः; हयैः— अश्वैः; युक्ते— सङ्गते; महति— विशाले; स्यन्दने— रथे; स्थितौ— उपस्थितौ; माधवः— कृष्णः (लक्ष्मीपतिः); पाण्डवः—पाण्डुपुत्रोऽर्जुनः; च— अपि; एव— हि; दिव्यौ— अत्युत्तमौ; शंखौ— कम्बू; प्रदध्मतुः— वादितवन्तौ|

ततोऽन्यपक्षे श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ माधवोऽर्जुनश्चैव दिव्यौ शंखौ प्रदध्मतुः|

तात्पर्यम्— भीष्मदेवधमितशंखतुलनया कृष्णार्जुनहस्तशंखौ दिव्याविति निरूपितौ| श्रीकृष्णस्य पाण्डवपक्षपातत्वादन्यविजयाशा नैव स्यादिति दिव्यशंखनादेनोद्दिष्टम्| जयस्तु पाण्डुपुत्राणां येषां पक्षे

जनार्दनः, इति स्मृतिः| श्रीकृष्णसङ्गत्या विजयः स्वयं सदैव पाण्डुपुत्रवज्ञनेषु तिष्ठत्येव| यदा यदा यत्र यत्र भगवत उपस्थितिस्तदा तदा तत्र तत्र लक्ष्म्या अपि, स्वपतिविरहनिमेषमात्रासहनत्वात्| अत एव विजयः श्रीश्चार्जुनं प्रतीक्षेत एवेति श्रीविष्णोरथवा श्रीकृष्णस्य दिव्यशंखोत्पन्ननादेनोद्दिष्टम्| अपरं च ते द्वे मित्रे अग्निदेवेनार्जुनदत्ते रथ उपविष्ट इत्यनेन सूच्यते यत्रिलोकमपि सर्वत उह्यमानः स रथः सर्वत्रैव विजयप्राप्तिसमर्थः|

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः|

पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः||१५||

पाञ्चजन्यम्— पाञ्चजन्यनामकं शंखम्; हृषीक+ईशः— भक्तेन्द्रियाणां निर्देष्टा भगवाञ् श्रीकृष्णः; देवदत्तम्— देवदत्तनामकं शंखम्; धनं+जयः— धनं जयतीति, अर्जुनः; पौण्ड्रम्— पौण्ड्रनामकं शंखम्; दध्मौ— वादितवान्; महाशंखम्— भीषणशंखम्; भीम+कर्मा— अतिमानवीयकर्माणि यस्य सः; वृक+उदरः— वृकस्येवोदरं यस्य सः, महाशनो भीमः|

श्रीकृष्णः पाञ्चजन्यमर्जुनश्च देवदत्तं भीमकर्मा वृकोदरो भीमश्च महाशंखं पौण्ड्रं दध्मुः|

तात्पर्यम्— अत्र श्रीकृष्णो हृषीकेश उच्यते तस्य सर्वेन्द्रियप्रभुत्वात्| जीवानां तद्विभिन्नांशत्वाज्जीवेन्द्रियाण्यपि कृष्णेन्द्रियविभिन्नांशा एव| जीवेन्द्रियकारणदर्शनासमर्थत्वान्निर्विशेषवादिन इन्द्रियहीनत्वनिर्विशेषत्वाभिधानेन समस्तजीवप्रतिपादने सदैवोत्सुकाः| सर्वजीवहृत्स्थो भगवांस्तदिन्द्रियाणि निर्दिशति किन्तु जीवशरणागतत्वतारतम्यानुसारेणैव| शुद्धभक्तेन्द्रियाणि तु साक्षादेव निर्दिशति| अत्र कुरुक्षेत्रयुद्धभूमौ तस्यार्जुनदिव्येन्द्रियसाक्षान्निर्देशत्वाद् भगवतो विशिष्टं नाम हृषीकेश इति| स्वविभिन्नकार्यानुसारेण भगवतो विभिन्ननामानि| यथा हि मधुनामकासुरवधेन तस्य नाम मधुसूदनः| धेनुभ्य इन्द्रियेभ्यश्चानन्दप्रदानत्वाद् गोविन्दः| वसुदेवपुत्ररूपाविर्भावत्वाद्वासुदेवः| मातृरूपेण देवकीस्वीकाराद्देवकीनन्दनः| यशोदायै वृन्दावनबाल्यलीलाप्रदर्शनत्वाद्यशोदानन्दनः| स्वमित्रार्जुनसारथ्यात् पार्थसारथिः| तथैव कुरुक्षेत्रयुद्धभूमावर्जुननिर्देशकत्वात्तस्य नाम हृषीकेशः| विविधयज्ञानुष्ठानव्ययार्थआ राजापेक्षितधनोपादाने ज्येष्ठसाहाय्यप्रदानत्वादर्जुनोऽत्र धनञ्जय उच्यते| तथैव हिडिम्बासुरवधाद्यतिमानवीयकार्यसमर्थत्वादत्यहारित्वाच्च भीमो वृकोदरो भीमकर्मेत्यादि नामभिः ख्यायते| एवं पाण्डवपक्षे श्रीकृष्णादिभिन्नव्यक्तिधमितशंखविशेषाः सैनिकानामतीव प्रोत्साहकारिण एवासन्| अन्यपक्षे

तु न च तादृशी प्रतिष्ठा न च परमनिर्देशकस्य श्रीकृष्णस्योपस्थितिर्न च लक्ष्मीदेव्याः| अनेन प्रकारेण तेषां पराजयः पूर्वमेव निश्चित एवेति शंखध्वन्याख्यातसन्देशः|

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः|

नकुलः सहदेवश्च सुघोषमणिपुष्पकौ||१६||

काश्यश्च परमेष्वासः शिखण्डी च महारथः|

धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः||१७||

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते|

सौभद्रश्च महाबाहुः शंखान् दध्मुः पृथक् पृथक्||१८||

अनन्तविजयम्— अनन्तविजयनामकं शंखम्; राजा— नृपः; कुन्ती+पुत्रः— कुन्तीदेव्या आत्मजः; युधिष्ठिरः— युधिष्ठिरनामकः पाण्डवः; नकुलः— नकुलनामकः पाण्डवः; सहदेवः— सहदेवनामकः पाण्डवः; च— अपि; सुघोष+मणिपुष्पकौ— सुघोषनामकं शंखं मणिपुष्पकनामकं शंखं च; काश्यः— वाराणस्या राजा; च— अपि; परमेष्वासः— महाधनुर्धरः; शिखण्डी— शिखण्डी नाम वीरः; च— अपि; महारथः— एकाकी सहस्रशः प्रत्योद्धुं समर्थो यः सः; धृष्टद्युम्नः— द्रुपदपुत्रः; विराटः— पाण्डवेष्वज्ञातवासे सत्सु विराटो नाम राजा तेभ्यः शरणमददत्; च— अपि; सात्यकिः— श्रीकृष्णसारथिर्युयुधानः; च— अपि; अपराजितः— पराभवो यस्य कदाचिन्नाभूत् सः; द्रुपदः— पाञ्चालानां राजा; द्रौपदेयाः— द्रौपदीपुत्राः; च— अपि; सर्वशः— सर्वतः; पृथिवी+पते— हे राजन्; सौभद्रः— सुभद्रापुत्रोऽभिमन्युः; च— अपि; महाबाहुः— विशालभुजः; शंखान्— कम्बून्; दध्मुः— वादितवन्तः; पृथक् पृथक्— भिन्नं भिन्नम्|

हे पृथिवीपते! कुन्तीपुत्रो राजा युधिष्ठिरोऽनन्तविजयम्, नकुलश्च सुघोषम्, सहदेवश्च मणिपुष्पकम्, परमेष्वासश्च काश्यो महारथश्च शिखण्डी, धृष्टद्युम्नश्च विराटश्चापराजितः सात्यकिश्च द्रुपदश्च द्रौपदेयाश्च महाबाहुः सौभद्रश्च स्वस्वशंखान् दध्मुः|

तात्पर्यम्— पाण्डवछलने राज्यसिंहासनस्वपुत्रस्थापनाध्यवसाये च भवतो विवेकहीननीतिर्न श्लाघनीया खल्विति सञ्जयोऽतिचातुर्येण राज्ञे धृतराष्ट्रायासूचयत्| तस्मिन्महासंग्रामे सकलकुरुवंशो हन्यष्यत इति

पूर्वमेव स्फुटं लक्षणैरुद्दिष्टम्| भीष्मपितामहाद्यभिमन्य्वादिपौत्रपर्यन्तं विश्वनानादेशराजाश्च ये तत्रोपस्थितास्तेषां विनाशो निश्चित एव| समस्तविपदि धृतराष्ट्र एव हेतुः स्वपुत्रकुनीतिप्रोत्साहकत्वात्|

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्|

नभश्च पृथिवीं चैव तुमुलोऽभ्यनुनादयन्||१९||

सः— असौ; घोषः— शब्दः; धार्तराष्ट्राणाम्— धृतराष्ट्रपुत्राणाम्; हृदयानि— वक्षांसि; व्यदारयत्— विदारितवान्; नभः— आकाशम्; च— अपि; पृथिवीम्— भूमितलम्; च— अपि; एव— हि; तुमुलः— कोलाहलपूर्णः; अभ्यनुनादयन्— प्रतिध्वनिभिरापूरयन्|

स विभिन्नशंखानां तुमुलो घोषो नभः पृथिवीं चैव प्रतिध्वनिभिरापूरयन् धार्तराष्ट्राणां हृदयानि व्यदारयत्|

तात्पर्यम्— दुर्योधनपक्षपातभीष्मादिभिः स्वस्वशंखेषु ध्मायमानेषु पाण्डवपक्षे हृदयभङ्गो नाभूदिति बोध्यं तदनुक्तेः| अस्मिन् विशिष्टश्लोके तु पाण्डवपक्षध्वनितशब्दकृतो धार्तराष्ट्रहृदयभङ्गो द्योत्यते| तत्र स्वयं पाण्डवाः श्रीकृष्णे च तद्विश्वासो हेतुः| महिष्ठविपद्यपि परमेश्वरशरणागतः कस्माच्चिन्न बिभेति|

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः|

प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः|

हृषीकेशं तदा वाक्यमिदमाह महीपते||२०||

अथ— तत्पश्चात्; व्यवस्थितान्— स्थितान्; दृष्ट्वा— अवलोक्य; धार्तराष्ट्रान्— धृतराष्ट्रपुत्रान्; कपि+ध्वजः— हनुमच्चित्रेणाङ्किता पताका यस्य सः, अर्जुनः; प्रवृत्ते— प्रवर्तमाने; शस्त्र+सम्पाते— बाणविक्षेपे; धनुः— चापम्; उद्यम्य— गृहीत्वा; पाण्डवः— पाण्डुपुत्रोऽर्जुनः; हृषीकेशम्— श्रीकृष्णम्; तदा— तस्मिन् समये; वाक्यम्— वचनम्; इदम्— एतत्; आह— उवाच; मही+पते— हे राजन्|

हे महीपते! अथ कपिध्वजोऽर्जुनो व्यवस्थितान् धार्तराष्ट्रान् दृष्ट्वा प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य तदा हृषीकेशमिदं वाक्यमाह|

तात्पर्यम्— युद्धमासन्नप्रारब्धमेवासीत्| श्रीकृष्णसाक्षादुपदेशनिर्दिष्टपाण्डवानामतर्कितया सैनिकव्यवस्थया धार्तराष्ट्रा ईषन्निरुत्साहिता बभूवुरित्युपर्युक्तकथनादवगम्यते| अर्जुनध्वजे हनुमच्चित्रं विजयलक्षणमेव च यतो श्रीरामरावणयोर्युद्धे हनुमत्सहायतया श्रीरामो विजयं प्राप| अत्र चोभौ श्रीरामो हनुमांश्च तत्साहाय्यार्थमर्जुनरथोपस्थितौ| श्रीकृष्णः श्रीरामः स्वमेव ततो यत्र यत्र श्रीरामस्तत्र तत्र तन्नित्यदासो हनुमांश्च तन्नित्यपत्नी लक्ष्मीदेवी सीता च| अत एव येभ्यः केभ्यश्चिच्छत्रुभ्योऽर्जुनस्य भयहेतुर्नैव| विशेषतश्च हृषीकेशः श्रीकृष्णस्तन्निर्देशाय स्वयमुपस्थितः| अनेन प्रकारेण युद्धानुष्ठानविषयेऽर्जुनस्यार्थे सर्वे सुमन्त्राः सुलभाः| स्वनित्यभक्तकृते भगवद्विहिततादृशमङ्गल्यस्थितिषु सुनिश्चितविजयलक्षणानि सन्तिष्ठन्ते|

अर्जुन उवाच

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत|

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्||२१||

कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे||२२||

अर्जुनः उवाच— अर्जुन आह; सेनयोः— अनीकयोः; उभयोः— द्वयोः; मध्ये— अन्तरा; रथम्— स्यन्दनम्; स्थापय— दधातु; मे— मम; अच्युत— हे अच्युत; यावत्— येन; एतान्— इमान् सर्वान्; निरीक्षे— अवलोके; अहम्— (अर्जुनः); योद्धु+कामान्— योद्धुमिच्छतः; अवस्थितान्— स्थितान्; कैः— कैर्जनैः; मया— (अर्जुनेन); सह— साकम्; योद्धव्यम्— युद्धं करणीयम्; अस्मिन्— एतस्मिन्; रण+समुद्यमे— युद्धप्रयासे|

अर्जुन उवाच— हे अच्युत! उभयोः सेनयोर्मध्ये मम रथं स्थापय येनाहमेतान् योद्धुकामानत्रावस्थितान्निरीक्षे यैरस्मिन् रणसमुद्यमे मया सह योद्धव्यम्|

तात्पर्यम्— यद्यपि श्रीकृष्णः स्वयं भगवानेव तथाप्यहैतुकानुग्रहात् स्वमित्रसेवानिरतो बभूव| स्वभक्तस्नेहच्युतिहीनत्वात्तस्याभिधानमत्राच्युत इति| सारथिरूपेणार्जुनाज्ञास्तस्य कर्तव्यमेव ततस्तद्विच्युतिराहित्यात् सोऽच्युतः सम्बोध्यते| स्वभक्तेकृते सारथिपदग्रहणेऽपि तस्य परमत्वं नैव बाधितम्| सर्वावस्थासु स श्रीभगवान् सकलेन्द्रियप्रभुर्हृषीकेश एव| प्रभुदासयोः सम्बन्धः सदैवातिमधुरो दिव्यश्च| दासः सदैव भगवन्तं सेवितुमुद्यतस्तिष्ठति भगवांश्च सदैव भक्तसेवावसरार्थी| स्वयं शास्तृभूतापेक्षया भक्ते

प्रभुपदप्राप्ते भगवदानन्दो वर्धते| स्वयं प्रभुभूतत्वादन्ये सर्वे तदाज्ञाधीना न च कोऽपि तदुपरि तदाज्ञापकः| सर्वावस्थासु तस्याच्युतस्वामित्वेऽपि शुद्धभक्तेनाज्ञाप्यमानः स दिव्यानन्दमास्वादते|

भगवच्छुद्धभक्तत्वादर्जुनः पितृव्यपुत्रान् प्रतियोद्धुं नैच्छत् किन्तु दुर्योधनस्य सन्ध्यस्वीकारदुराग्रहेण स युद्धभूमिं बलादागम्यत| अतस्तत्रोपस्थितान्नेतॄन् द्रष्टुं सोऽत्युत्सुक आसीत्| यद्यपि युद्धभूमौ शान्तिप्रयासो नैव सम्भवेत्तथापि स तांस्तेषां चानिष्टयुद्धौत्सुक्यप्रकारं निरीक्षितुमैच्छत्|

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः|

धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः||२३||

योत्स्यमानान्— युद्धं करिष्यतः; अवेक्षे— अवलोके; अहम्— (अर्जुनः); ये— (योधाः); एते— इमे; अत्र— अस्मिन् स्थाने; समागताः— सम्मिलिताः; धार्तराष्ट्रस्य— धृतराष्ट्रपुत्रस्य; दुर्बुद्धेः— दुरात्मनः; युद्धे— रणे; प्रिय+चिकीर्षवः— प्रियं कर्तुमिच्छन्तः|

ये दुर्बुद्धेर्धार्तराष्ट्रस्य प्रसन्नार्थमत्र समागतास्तान् योत्स्यमानानहमवेक्षे|

तात्पर्यम्— स्वपितृसहायतया दुरुपायैः पाण्डवराज्यमपहर्तुमैच्छद्दुर्योधन इति विदितरहस्यम्| अत एव दुर्योधनपक्षपाताः सर्वे तत्सधर्माः स्युः| ते के येऽत्रोपतिष्ठन्तीत्येव ज्ञातुमर्जुनो युद्धारम्भात् पूर्वं तानवलोकितुमैच्छत् परन्तु तैः सह शान्तिसन्धिप्रस्तावस्तस्योद्देश्यं नैव| स्वपार्श्वकृष्णोपस्थितिहेतुकविजय विश्वस्तोऽप्यर्जुनस्तेषां बलं निश्चेतुमिष्टवान् यैः सह तेन योद्धव्यमेवेत्यपि तथ्यम्|

सञ्जय उवाच

एवमुक्तो हृषीकेशो गुडाकेशेन भारत|

सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम्||२४||

सञ्जयः उवाच— सञ्जय आह; एवम्— इत्थम्; उक्तः— सम्बोधितः; हृषीकेशः— भगवान् श्रीकृष्णः; गुडाकेशेन— अर्जुनेन; भारत— हे भरतवंशज; सेनयोः— अनीकयोः; उभयोः— द्वयोः; मध्ये— अन्तरा; स्थापयित्वा— न्यस्य; रथ+उत्तमम्— परमं स्यन्दनम् |

सञ्जय उवाच— हे भारत! गुडाकेशेनैवमुक्तो हृषीकेशः सेनयोरुभयोर्मध्ये रथोत्तमं स्थापयित्वा|

तात्पर्यम्— अत्रार्जुनो गुडाकेशोऽभिधीयते| गुडाका निद्रा| तस्या ईशो गुडाकेशः| अज्ञानेऽपि निद्रा| तथा कृष्णसखित्वादर्जुन उभे निद्राज्ञानेऽजयत्| कृष्णमहाभक्तत्वात् स क्षणमात्रमपि कृष्णं विस्मर्तुं नाशक्नोद्यतोऽयमेव भक्तस्वभावः| जागर्तौ वा स्वप्ने वा भगवद्भक्तः कृष्णनामरूपगुणलीलानुचिन्तनं कदाचिन्न जहाति| तथा कृष्णभक्तो निरन्तरकृष्णानुचिन्तनमात्रेणोभेऽज्ञाननिद्रे जेतुं प्रभवति| इदं कृष्णभावनामृतमथवा समाधिरुच्यते| सकलजीवेन्द्रियमनसां निर्देशकरूपेण हृषीकेशः कृष्णोऽर्जुनस्य सेनामध्यरथस्थापनोद्देश्यं प्रत्येतुं समर्थः| तत् कृत्वा स एवमुवाच|

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्|

उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति||२५||

भीष्म+द्रोण+प्रमुखतः— भीष्मस्य द्रोणस्य चाग्रे; सर्वेषाम्— समस्तानाम्; च— अपि; मही+क्षिताम्— पृथिवीनृपाणाम्; उवाच— आह; पार्थ— हे पृथापुत्र; पश्य— अवलोकस्व; एतान्— इमान्; समवेतान्— सम्मिलितान्; कुरून्— कुरुवंशीयान्; इति— इत्थम्|

भीष्मद्रोणयोर्महीक्षितां च समक्षं श्रीभगवानुवाच— हे पार्थ! अत्रैतान् समवेतान् कुरून् पश्येति|

तात्पर्यम्— सकलजीवान्तर्यामित्वाच्छ्रीकृष्णोऽर्जुनमनोभावमवागच्छत्| अस्मिन् प्रसङ्गे हृषीकेशशब्दप्रयोगेण तस्य सर्वज्ञातृत्वं द्योतितम्| तथैव पार्थशब्दोऽर्जुनसम्बन्धे सार्थकः| यतस्त्वं मत्पितुर्वसुदेवस्य भगिन्याः पृथायाः पुत्रोऽसि ततोऽहं त्वत्सारथ्यमगृह्णामिति सोऽर्जुनं विज्ञापयितुमैच्छत्तन्मित्रत्वात्| अथ कुरून् पश्येति वचने कृष्णेन किं विवक्षितम्? किमर्जुनस्तत्रैव तिष्ठेन्न युध्येत च? कृष्णः स्वीयपितृव्याः पुत्रस्यैवंविधाचारं कदाचन नापेक्षेत| अनेन प्रकारेणार्जुनचिन्तनं भगवता मित्रभावपरिहासेन पूर्वमेव निर्दिष्टम्|

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान्|

आचार्यान्मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा|

श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि||२६||

तत्र— तस्मिन् स्थाने; अपश्यत्— दृष्टवान्; स्थितान्— उपस्थितान्; पार्थः— अर्जुनः; पितॄन्— जनकान्; अथ— अपि; पितामहान्— पितॄणां पितॄन्; आचार्यान्— गुरून्; मातुलान्— मातॄणां भ्रातॄन्; भ्रातॄन्— सोदरान्; पुत्रान्— आत्मजान्; पौत्रान्— पुत्रपुत्रान्; सखीन्— मित्राणि; तथा— अपि; श्वसुरान्— पत्नीनां पितॄन्; सुहृदः— हितकामान्; च— अपि; एव— हि; सेनयोः— अनीकयोः; उभयोः— द्वयोः पक्षयोः; अपि— च|

तत्र पार्थ उभयोः सेनयोः स्थितान् पितॄन् पितामहानाचार्यान्मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखीञ् श्वशुरान् सुहृदश्चापश्यत्|

तात्पर्यम्— युद्धभूमावर्जुनो नानाबान्धवान् ददर्श| भूरिश्रवादिपितृसमकालीनान् भीष्मसोमदत्तादिपितामहान् द्रोणकृपाद्याचार्यान् शल्यशकुन्यादिमातुलांल् लक्ष्मणादिपुत्रानश्वत्थामादिसखीन् कृतवर्मादिसुहृदः सेनान्तर्गतबहुमित्राणि च द्रष्टुमशक्नोत्|

तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान्|

कृपया परयाविष्टो विषीदन्निदमब्रवीत्||२७||

तान्— अमून् सर्वान्; समीक्ष्य— दृष्ट्वा; सः— असौ; कौन्तेयः— कुन्तीपुत्रः; सर्वान्— सर्वप्रकारान्; बन्धून्— बान्धवान्; अवस्थितान्— स्थितान्; कृपया— करुणया; परया— अत्यधिकया; आविष्टः— अभिभूतः; विषीदन्— अनुशोचन्; इदम्— एतत्; अब्रवीत्— अवदत्|

तान् सर्वानवस्थितान् बन्धून् समीक्ष्य परया कृपयाविष्टो भूत्वा विषीदन् स कौन्तेय इदमब्रवीन्|

अर्जुन उवाच

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्|

सीदन्ति मम गात्राणि मुखं च परिशुष्यति||२८||

अर्जुनः उवाच— अर्जुन आह; दृष्ट्वा— अवलोक्य; इमम्— एतम्; स्वजनम्— स्वीयबन्धून्; कृष्ण— हे कृष्ण; युयुत्सुम्— योद्धुमिच्छन्तम्; समुपस्थितम्— स्थितम्; सीदन्ति— शीर्यन्ते; मम— (अर्जुनस्य); गात्राणि— शरीराङ्गानि; मुखम्— वक्त्रम्; च— अपि; परिशुष्यति— शुष्कं भवति|

अर्जुन उवाच— हे कृष्ण! इदं युयुत्सुमग्रे समुपस्थितं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति मुखं च परिशुष्यति|

तात्पर्यम्— यथार्थभगवद्भक्तिर्यस्य तस्य सत्पुरुषाणां देवतानां च सर्वसद्गुणाः| अभक्तस्तु शिक्षासंस्कृतिभ्यां लौकिकयोग्यतोत्कर्षगतो भूत्वापि तत्सद्गुणहीन एव| तथाभूतोऽर्जुनो युद्धभूमौ बान्धवान्मित्राणि च दृष्ट्वा सद्यः परस्परयुद्धकृतनिश्चयेषु तेषु करुणयाभिभूतोऽभवत्| स्वसैनिकानधिकृत्य स प्रारम्भादेव दयालुरासीत् किन्तु तदासन्नमृत्युपूर्वदर्शनेन विपक्षसैनिकेष्वपि करुणामन्वभवत्| एवं चिन्तयत्यर्जुने तस्य शरीराङ्गान्यकम्पन्त मुखं च शुष्कमभवत्| तेषां युद्धौत्सुक्यं दृष्ट्वा स ईषच्चकितो बभूव| प्रायोऽर्जुनस्य सर्वे सगोत्रास्तं प्रत्योद्धुमागताः| इदमेवंविधभक्तमर्जुनमभ्यभवत्| अत्रानुक्तेऽपि न केवलं तस्य गात्रकम्पो मुखशोषणं चापि तु करुणया रोदनं चेत्यनुमातुं शक्यते| अर्जुनस्य तु तादृशलक्षणानि नैव दौर्बल्यादपि तु भगवच्छुद्धभक्तलक्षणभूतमृदुहृदयत्वादेव| तत एवमुच्यते—

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः|

हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः, इति| (भा। ५।१८।१२।)

“श्रीभगवति निश्चला भक्तिर्यस्य तस्य देवतानां सर्वसद्गुणाः| अभक्तस्य त्वल्पमूल्यलौकिकयोग्यता एव यतः स मनोरथेन भ्रमत्यवश्यं चासत्योज्ज्वलमाययाकृष्टः|”

वेपथुश्च शरीरे मे रोमहर्षश्च जायते|

गाण्डीवं स्रंसते हस्तात्त्वक् चैव परिदह्यते||२९||

वेपथुः— देहकम्पः; च— अपि; शरीरे— देहे; मे— मम; रोम+हर्षः— रोमाञ्चः; च— अपि; जायते— भवति; गाण्डीवम्— अर्जुनधनुः; स्रंसते— विपतति; हस्तात्— करात्; त्वक्— मानुषचर्मा; च— अपि; एव— हि; परिदह्यते— सन्तप्यते|

मम सकलदेहः कम्पते रोमहर्षश्च जायते| गाण्डीवं हस्तात् स्रंसते त्वक् चैव परिदह्यते|

तात्पर्यम्— देहकम्पो द्विविधो रोमहर्षश्च द्विविधः| तादृशानि शारीरिकलक्षणानि लौकिकावस्थाहेतुकमहाभयाद्वाध्यात्मिकपरमानन्दाद्वा जायन्ते| अध्यात्मसाक्षात्कारे भयं नैव विद्यते| अस्यामवस्थायामर्जुनलक्षणानि प्राणहानिरूपलौकिकभयात्| अन्यैर्लक्षणैरप्येतत् स्फुटम्— अधीरत्वात् प्रसिद्धं गाण्डीवं हस्तान्न्यपतद् हृदयेऽन्तर्दहनत्वाच्च स त्वग्दहनमन्वभवदिति| एतानि लक्षणानि देहात्मबुद्धिनिमित्तानि|

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः|

निमित्तानि च पश्यामि विपरीतानि केशव||३०||

न— नैव; च— अपि; शक्नोमि— समर्थोऽस्मि; अवस्थातुम्— वर्तितुम्; भ्रमति— विमोहितं भवति; इव— यथा; च— अपि; मे— मम; मनः— मानसम्; निमित्तानि— कारणानि; च— अपि; पश्यामि— अवलोके; विपरीतानि— विरोधीनि; केशव— हे केशिनिषूदन (कृष्ण)|

न चाहमत्रावस्थातुं शक्नोमि मम मनश्च भ्रमतीव| हे केशव! केवलं दुर्भाग्यनिमित्तानि पश्यामि|

तात्पर्यम्— अधैर्यादर्जुनो युद्धभूमाववस्थातुं नाशक्नोन्मनोदौर्बल्याच्च स्वात्मानं व्यस्मरत्| संसारिवस्तुषु नितान्तासक्त्या नरस्तादृशमोहकावस्थायां न्यस्यते| “भयं द्वितीयाभिनिवेशतः स्यात्” इति (भा। ११।२।३७)| तादृशं भयं मानसातुल्यता च संसार्यवस्थातिनिमग्नेषु जायेते| शत्रून् जित्वाप्यहं सुखी न स्यामित्यर्जुनो युद्धभूमौ केवलं दुःखदपरिणामं पूर्वमेवापश्यत्| “निमित्तानि विपरीतानि” इति शब्दौ सार्थकौ| स्वाशासु निष्फलत्वमेव दृष्ट्वा केनाहमिहेति मन्यते| सर्वे स्वात्मानं स्वार्थं चैव ध्यायन्ति परमात्मानं तु न कोऽपि| कृष्णेच्छयार्जुनो यथार्थस्वार्थविषयाज्ञानं दर्शयति| यथार्थस्वार्थो विष्णावथवा कृष्णे निहितः| तद्विस्मृत्या बद्धजीवः संसारदुःखान्यनुभवति| रणे विजयः शोकहेतुरेवेत्यर्जुनोऽमन्यत|

न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे|

न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च||३१||

न— नैव; च— अपि; श्रेयः— कल्याणम्; अनुपश्यामि— पूर्वमवलोके; हत्वा— मारयित्वा; स्वजनम्— स्वीयबन्धून्; आहवे— युद्धे; न— न च; कांक्षे— इच्छामि; विजयम्— जयम्; कृष्ण— हे कृष्ण; न च— नापि; राज्यम्— राष्ट्रम्; सुखानि— आनन्दम्; च— अपि|

हे कृष्ण! न चाहवे स्वजनं हत्वा श्रेयोऽनुपश्यामि न च विजयं राज्यं च सुखानि च कांक्षे|

तात्पर्यम्— विष्णावथवा कृष्ण एव स्वार्थ इत्यज्ञात्वा तादृशावस्थासु सुखात्याशावन्तो बद्धजीवाः शरीरसम्बन्धैराकृष्यन्ते| अन्धतापूर्वकदेहात्मबुद्ध्या ते लौकिकसुखकारणान्यपि विस्मरन्ति| अत्रार्जुनेन क्षत्रियधर्मोऽपि विस्मृत इति प्रतिभाति| साक्षात्कृष्णाज्ञानिर्दिष्टो युद्धभूमिहतः क्षत्रिय साधनानुशीलनपरिनिष्ठितसन्न्यासी चेति मनुष्यो द्विविधः शक्तिमज्ज्वलनसूर्यमण्डले प्रवेष्टुं योग्यो भवतीति श्रूयते| अर्जुनः शत्रूनपि न जिघांसति किमुत स्वबन्धून्| स्वजनवधेनेह सुखं नैव स्यादिति मन्यते ततो न युयुत्सते यथैव क्षुधाहीनस्य पाकक्रियाप्रवणता नैव जायते| अथाशाभङ्गे विविक्तजीवनाय वनप्रस्थानमेव तस्य निश्चयः| क्षत्रियत्वात्तु वृत्त्यर्थं तस्य राज्येन प्रयोजनमेव क्षत्रियाणामन्यथानुपजीविकात्वात्| अर्जुनस्य तु न किश्चन राज्यम्| स्वजनयुद्धेनैव पित्रुपात्तराज्यग्रहणावसरः स्याद्यस्यानुष्ठानात् स विमुखीभूतः| अतो विविक्तनिराशजीवनाय वनं गन्तुमर्हामीति तस्य गणनम्|

किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा|

येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च||३२||

त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च|

आचार्याः पितरः पुत्रास्तथैव च पितामहाः||३३||

मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा|

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन||३४||

अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते|

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन||३५||

किम्— किं प्रयोजनम्; नः— अस्माकम्; राज्येन— राष्ट्रेण; गोविन्द— हे गोविन्द; किं भोगैः— किं कामैः; जीवितेन— जीवनेन; वा— अथवा; येषामर्थे— येषां कृते; कांक्षितम्— इष्टम्; नः— अस्माभिः; राज्यम्— राष्ट्रम्; भोगाः— कामाः; सुखानि— आनन्दः; च— अपि; ते— अमी; इमे— एते; अवस्थिताः— स्थिताः; युद्धे— युद्धभूमौ; प्राणान्— जीवनम्; त्यक्त्वा— हित्वा; धनानि— सम्पदः; च— अपि; आचार्याः— गुरवः; पितरः— जनकाः; पुत्राः— आत्मजाः; तथा— च; एव— हि; च— अपि; पितामहाः— पितॄणां पितरः; मातुलाः— मातॄणां भ्रातरः; श्वसुराः— पत्नीनां पितरः; पौत्राः— पुत्रपुत्राः; श्यालाः— भगिनीपतयः; सम्बन्धिनः— बन्धवः; तथा— च; एतान्— इमान्; न— नैव; हन्तुम्— मारयितुम्; इच्छामि— कांक्षे; घ्नतः— हिंसतः; अपि— यद्यपि; मधुसूदन— हे मधुनिषूदन (कृष्ण); अपि— यद्यपि; त्रैलोक्य+राज्यस्य— त्रयाणां लोकानामाधिपत्यम्; हेतोः— कारणात्; किं नु— किमुत; मही+कृते— पृथिव्यर्थम्; निहत्य— मारयित्वा; धार्तराष्ट्रान्— धृतराष्ट्रपुत्रान्; नः— अस्माकम्; का प्रीतिः— कीदृशी प्रसन्नता; स्यात्— भवेत्; जनार्दन— हे कृष्ण|

हे गोविन्द! अस्माकं किं राज्येन भोगैर्जीवितेन वा यतो येषामर्थेऽस्माभिः सुखानि भोगा राज्यं च कांक्ष्यन्ते ते स्वयं युद्धभूमौ प्राणान् धनानि च त्यक्तुमुद्यता अवतिष्ठन्ते? हे मधुसूदन! अहम् घ्नतोऽप्याचार्यान् पितॄन् पुत्रान् पितामहान्मातुलाञ् श्वशुरान् पौत्राञ् श्यालान् सम्बन्धिनश्च हन्तुं नेच्छामि त्रैलोकराज्यस्य हेतोरपि किमुत महीकृते| हे जनार्दन! धार्तराष्ट्रान्निहत्यास्माकं का प्रीतिः स्यात्?

तात्पर्यम्— इन्द्रियाणां धेनूनां च सर्वानन्दविषयत्वादत्र श्रीकृष्णो गोविन्दनाम्नार्जुनेन सम्बोध्यते| ममेन्द्रियाणि केन प्रकारेण तृप्तानि स्युरिति भवतानुमेयमित्यर्जुनेन सूचितं तदभिधानप्रयोगेण| किन्त्वस्माकमिन्द्रियतर्पणं गोविन्दकर्तव्यं नैव| यदि तु वयं गोविन्देन्द्रियाणि तर्पयितुं प्रयतामहे तर्हि स्वतोऽस्मदिन्द्रियाणि तृप्तीभवन्ति| संसारदृष्ट्या सर्वे स्वेन्द्रियतृप्तिमिच्छन्ति तथा चापेक्षन्ते यदीश्वरस्तादृशतृप्तेः प्रदाता भवेत्| तदर्हत्वतारतम्यानुसारेणेश्वरो जीवेन्द्रियाणि तर्पयति न तु तल्लोभानुसारेण| परन्तु स्वेन्द्रियतृप्तिकामं विहाय यदा गोविन्देन्द्रियतर्पणप्रयत्नलक्षणो विपरीतमार्गो गृह्यते तदा गोविन्दानुग्रहेण जीवस्य सर्वाभिलाषाः कृतकृत्याः| अत्र तेषु स्वाभाविककरुणयार्जुनस्य जातिकुटुम्बिगम्भीरस्नेहोऽंशतः प्रकट्यते| तस्मात् स न हि योद्धुकामः| सर्वे सम्बन्धिमित्रेभ्यः स्ववैभवं प्रदर्शयितुमिच्छन्ति परन्त्वर्जुनः शङ्कते यत् सर्वे बान्धवा मित्राणि च युद्धभूमौ हतानि स्युस्तथा विजयानन्तरं केनचित् सह वैभवं भोक्तुमशक्यं स्यात्| इदं लौकिकं सामान्यगणनम्| दिव्यजीवनं तु भिन्नम्| यतो भक्तो भगवदभिलाषान् पूरयितुमिच्छति तर्हि भगवानिच्छति चेत् भक्तो भगवत्सेवाकृते सर्वविधैश्वर्याणि स्वीकरोति| नेच्छति चेत् किमपि न स्वीकुर्यात्| अर्जुनः

स्वबान्धवान्नाजिघांसत्तथा तेषां वधोऽपेक्षितश्चेत् कृष्णः स्वयं तान् हन्यादिति तस्याभिप्रायः| अत्र तावदर्जुनेनाज्ञातमासीद्यत्तेषां युद्धभूमावागमनात् पूर्वमेव कृष्णस्ताञ् जघान स्वेन च कृष्णस्य निमित्तमात्रं भाव्यम्| इदं तथ्यमुत्तराध्यायेषु निवेद्यते| भगवत्सहजभक्तत्वादर्जुनः स्वान् दुष्टान् पितृव्यपुत्रान् बान्धवांश्च प्रतिकर्तुं नैच्छत् किन्तु तेषां वधो भगवद्योजनैव| भगवद्भक्तो दुष्टान्न प्रतिकरोति| भगवांस्तु भक्तेषु दुष्टैः कृतापकारं न सहते| स्वार्थे भगवान् कस्यचित् क्षन्तुं शक्नोति भक्तापकारकस्य तु नैव| ततो यद्यप्यर्जुनस्तेषां क्षन्तुमैच्छत्तथापि भगवांस्तद्दुरात्मवधार्थं दृढसङ्कल्प एव|

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः|

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् सबान्धवान्|

स्वजनं हि कथं हत्वा सुखिनः स्याम माधव||३६||

पापम्— अधर्मः; एव— हि; आश्रयेत्— आगच्छेत्; अस्मान्— (पाण्डवान्); हत्वा— मारयित्वा; एतान्— इमान्; आततायिनः— आक्रामकान्; तस्मात्— ततः; न— नैव; अर्हाः— अर्हामः; वयम्— (पाण्डवाः); हन्तुम्— मारयितुम्; धार्तराष्ट्रान्— धृतराष्ट्रपुत्रान्; सबान्धवान्— मित्रैः सहितम्; स्व+जनम्— बन्धून्; हि— एव; कथम्— केन प्रकारेण; हत्वा— मारयित्वा; सुखिनः— प्रसन्नाः; स्याम— भवेम; माधव— हे लक्ष्मीपते कृष्ण|

एतानाततायिनो हत्वास्मान् पापमेवाश्रयेत्तस्माद्वयं धार्तराष्ट्रान् बान्धवांश्च हन्तुं नार्हामः| हे माधव! स्वजनं हि हत्वा कथं सुखिनः स्याम?

तात्पर्यम्— शास्त्रानुसारेणाततायिनः षड्विधाः—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः|

क्षेत्रदारापहर्ता च षडेते ह्याततायिनः|| इति|

एत आततायिनः सद्यो हन्तव्याः| तद्वधात् पापं नैवोत्पाद्यते| स आततायिवधः सामान्यमनुष्य उपपद्यते| अर्जुनस्तु तादृशो नैव| साधुस्वभावत्वात् स साधुवत्तेषु व्यवहर्तुमैच्छत्| तादृशं साधुत्वं तु क्षत्रियस्य नानुरूपम्| राज्यप्रशासनोत्तरदायी साधुरेव भवेन्न तु भीरुः| यथा हि श्रीराम एतावान् साधुरासीद्यदद्यापि

प्रजा रामराज्यजीवनोत्सुकास्तिष्ठन्ति परन्तु स कदाचन भीरुत्वं न दर्शयामास| तत्पत्न्याः सीताया अपहरणेन रावणो रामं प्रत्याततायी बभूव किन्तु श्रीरामो विश्वेतिहासेऽद्वितीयदण्डैस्तमताडयत्| अर्जुनं त्वधिकृत्य स्वपितामहाचार्यमित्र पुत्रपौत्रादिविशिष्टविधाततायिनो मन्तव्याः| तद्धेतोः साधारणाततायिनः प्रत्यावश्यकखरव्यवहारो न ग्रहणीय इति सोऽमन्यत| अन्यच्च साधूनां क्षान्तिः प्रस्तूयते| साधूनामेत आदेशाः कस्यचिद्राजनीतिकापदोऽपेक्षया महत्तराः| वरं धर्मसदाचारदृष्ट्या तत्क्षमा न तु राजनीतिकहेतुभिः स्वजनवध इति तस्य गणनम्| अत एव क्षणिकदैहिकसुखायैव तद्वधो न लाभकर इति च| अन्ततो राज्यानि तज्जन्यसुखानि चास्थिराण्येव ततः स्वजनवधेन किमर्थं संशये स्वं जीवनं मोक्षं च स निक्षिपेत्? एतत्प्रसङ्गे लक्ष्मीपत्यर्थेन माधवनाम्ना कृष्णस्य सम्बोधनं सार्थकम्| लक्ष्मीपतित्वाद् भवानन्ते यत् कर्म दुर्भाग्योद्भवहेतु स्यात्तत् कर्तुं मां न प्रेरयेदिति तस्याभिप्रायः| कृष्णस्तु कस्मैचिद्दुर्भाग्यं नैव नयति किमुत स्वभक्तेभ्यः|

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः|

कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्||३७||

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्|

कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन||३८||

यद्यपि— चेदपि; ते— इमे; न— नैव; पश्यन्ति— अवलोकन्ते; लोभ+उपहत+चेतसः— हृदयानि लौल्येनाभिभूतानि येषां ते; कुल+क्षय+कृतम्— कुटुम्बस्य वधे विहितम्; दोषम्— पापम्; मित्र+द्रोहे— सखिभिर्युद्धे; च— अपि; पातकम्— पापम्; कथम्— किम्; न— न हि; ज्ञेयम्— वेद्यम्; अस्माभिः— (पाण्डवैः); पापात्— अपराधात्; अस्मात्— एतस्मात्; निवर्तितुम्— विरन्तुम्; कुल+क्षय+कृतम्— वंशनाशे विहितम्; दोषम्— अपराधम्; प्रपश्यद्भिः— अवलोकमानैः; जनार्दन— हे कृष्ण|

हे जनार्दन! यद्यप्येते लोभोपहतचेतसः कुलवधे मित्रद्रोहे च दोषं न पश्यन्ति तथाप्यस्माभिर्दोषं प्रपश्यद्भिरस्मात् पापान्निवर्तितुं कथं न ज्ञेयम्?

तात्पर्यम्— केनचिद्विपक्षेण युद्धाय द्यूताय वामन्त्रितः क्षत्रियो न प्रत्याख्यादित्यपेक्ष्यते| तादृशकर्तव्यवशाद्दुर्योधनपक्षेण युद्धार्थमाकारितो भूत्वार्जुनः प्रत्याख्यातुं न शक्नुयात्| तत्र विपक्षस्तदभिग्रहपरिणामान्धः स्यादित्यर्जुनस्य मतम्| स तु दुष्परिणामान् दृष्ट्वाभिग्रहं स्वीकर्तुं नाशक्नोत्|

सुपरिणामे सति कर्तव्यता तत्त्वतः पालनीया न तु विपरीते| विधिनिषेधपक्षौ विमृश्यार्जुनेन युद्धाननुष्ठानं निश्चितमेव|

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः|

धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत||३९||

कुल+क्षये— कुटुम्बस्य विनाशे; प्रणश्यन्ति— नष्टा भवन्ति; कुल+धर्माः— कुटुम्बस्य सम्प्रदायविधयः; सनातनाः— शाश्वताः; धर्मे नष्टे— पारम्पर्यविधौ विलुप्ते सति; कुलम्— कुटुम्बम्; कृत्स्नम्— सकलम्; अधर्मः— पापम्; अभिभवति— अतिक्रमति; उत— अपि|

कुलक्षये सनातनाः कुलधर्माः प्रणश्यन्ति धर्मे च नष्टेऽधर्मः कृत्स्नं कुलमभिभवति|

तात्पर्यम्— वर्णाश्रमान्तर्भूतधार्मिकसम्प्रदायनानाविधिसाहाय्येन कुटुम्बिनः सम्यगुत्कर्षं यायुराध्यात्मिकार्थांश्च प्राप्नुयुः| कुले जन्मप्रभृत्यामरणं वयोवृद्धास्तादृशसंस्काराधिकारिणः| किन्तु वयोवृद्धेषु मृतेषु कुलसम्प्रदायसंस्कारा विरमेयुर्युवीयकुटुम्बिनश्चाधार्मिकव्यसनप्रवृत्ता भवेयुर्येन मोक्षावसरो नश्येत्| ततः केनचिद्धेतुना कुलवयोवृद्धा नैव हन्तव्याः|

अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः|

स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः||४०||

अधर्म+अभिभवात्— पापप्राधान्यात्; कृष्ण— हे कृष्ण; प्रदुष्यन्ति— दूषिता भवन्ति; कुल+स्त्रियः— कुटुम्बस्य नार्यः; स्त्रीषु— नारीषु; दुष्टासु— दूषितासु; वार्ष्णेय— हे वृष्णिवंशज; जायते— उद्भवति; वर्णसङ्करः— अवाञ्छितसन्तानः|

हे कृष्ण! कुलेऽधर्माभिभवात् कुलस्त्रियः प्रदुष्यन्ति| हे वार्ष्णेय! स्त्रीषु दुष्टासु सतीषु वर्णसङ्करो जायते|

तात्पर्यम्— मानुषसमाजे सत्सन्तानः शान्तिकल्याणाध्यात्मोत्कर्षमूलम्| वर्णाश्रमधर्मनियमा एवमेव विहिता येन राज्यप्रजासाधारणाध्यात्मोत्कर्षकृते समाजे सत्सन्तानप्राधान्यमुद्भवेत्| तादृशसत्सन्तानः

स्त्रीत्वसतीत्वनिष्ठाधीन एव| यथैव बालका अत्यन्तं कुमार्गगामिभावप्रवणास्तथैव स्त्रियोऽत्यन्तं दूषणप्रवणाः| तस्मादुभयेषां स्त्रीबालानां कुलवयोवृद्धरक्षया प्रयोजनम्| विविधधार्मिकक्रियायुक्तत्वेन स्त्रियो व्यभिचारप्रवृत्ता न भावयिष्यन्ते| चाणक्यपण्डितमते प्रायः स्त्रियो नातिबुद्धिमत्यस्ततो नैव विश्वासनीयाः| तथा ताः सदैव कुलसम्प्रदायधार्मिकक्रियासु नियोजनीया येन प्रकारेण तत्सतीत्वनिष्ठाभ्यां वर्णाश्रमधर्मप्रवेशयोग्यः सत्सन्तानो जनिष्यते| वर्णाश्रमधर्मविनाशेन स्वभावतः स्त्रियो नरेषु व्यवहर्तुं तैश्च संयोक्तुं स्वतन्त्रा भवन्त्येवं चानिष्टसन्तानसङ्कटे व्यभिचार आश्रीयते| प्रमत्तैः पुरुषैरपि समाजे व्यभिचारः प्रेर्यत एवं च युद्धमारीसङ्कटेऽवाञ्छितबालैर्मानुषजातिः परिपूर्यते|

सङ्करो नरकायैव कुलघ्नानां कुलस्य च|

पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः||४१||

सङ्करः— तादृशानिष्टबालाः; नरकाय— नारकीयजीवनाय; एव— हि; कुल+घ्नानाम्— कुटुम्बस्य वधकानाम्; कुलस्य— कुटुम्बस्य; च— अपि; पतन्ति— स्रंसन्ते; पितरः— पूर्वजाः; हि— एव; एषाम्— एतेषाम्; लुप्त+पिण्ड+उदक+क्रियाः— पिण्डजलार्पणकृतिर्विरता येषां ते|

वर्णसङ्करवृद्धिः कुलस्य कुलघ्नानां च नारकीयजीवनमेव भावयति| पिण्डोदकार्पणक्रियालोपेनैषां दूषितकुलानां पितरः पतन्ति हि|

तात्पर्यम्— सकामकर्मविधिविधानानुसारेण कुलस्य पितृभ्यः सामयिकं पिण्डजलार्पणमावश्यकम्| एतदर्पणं विष्णुपूजाद्वारेणानुष्ठीयते विष्णुनैवेद्योच्छिष्टभक्षणात् सर्वपापमोक्षोपपत्तेः| कदाचन विविधपापफलहेतुना पितरो दुःखमेव भुञ्जते| कदाचिच्च केचन स्थूलशरीरमपि प्राप्तुमसमर्था भुत्वा प्रेतरूपेण सूक्ष्मदेहेषु बलात् स्थाप्यन्ते| तथा पितृभ्यो वंशजैर्विष्णुनैवेद्योच्छिष्टेऽर्पिते सति ते प्रेतादिदुःखदयोनिभिर्मुच्यन्ते| पितृकृते तत्क्रियारूपसहायतानुष्ठानं कुलधर्मो हि तच्चाभक्तिमार्गानुयायिनां कर्तव्यमेव| भक्तिमार्गानुयायिनस्तु तत्क्रियानुष्ठानं न विहितम्| भक्तिमयसेवानुष्ठानमात्रेण सर्वदुःखेभ्यः सहस्रशः पितॄन्मोचयितुं प्रभवति| भागवतमाह (११।५।४१)—

देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्|

सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम्|| इति|

“यः कः सर्वकर्तव्यतास्त्यक्त्वा सर्वात्मना मुक्तिदातुर्मुकुन्दस्य पादकमले शरणं गत इदं मार्गं च दृढेनाश्रितः स देवताभ्यो मुनिभ्यः सामान्यप्राणिभ्यः कुटुम्बिभ्यो मानवतायै पितृभ्यो वा कर्तव्यता ऋणानि वा न धरति|” श्रीभगवद्भक्तिमयसेवानुष्ठानेन ताः कर्तव्यताः स्वतः साध्यन्ते|

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः|

उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः||४२||

दोषैः— अपराधैः; एतैः— एभिः सर्वैः; कुलघ्नानाम्— कुलस्य नाशकानाम्; वर्ण सङ्करकारकैः— अवाञ्छितबालककारणभूतैः; उत्साद्यन्ते— नाश्यन्ते; जातिधर्माः— जनसमूहयोजनाः; कुलधर्माः— कुटुम्बसम्प्रदायाः; च— अपि; शाश्वताः— नित्याः|

कुलघ्नानां वर्णसङ्करहेतुदुष्कर्मभिः सर्वे शाश्वता जातिधर्माः कुलधर्माश्चोत्साद्यन्ते|

तात्पर्यम्— सनातनधर्मेणाथवा वर्णाश्रमधर्मेण विहिताश्चतुर्वर्णयोजनाः कुलकल्याणक्रियाश्च मुक्तिप्राप्त्यैव कल्पन्ते| अतः प्रमत्तनेतृकृतः सनातनधर्मभङ्गस्तत्समाजे दुर्व्यवस्थामेवोत्पादयति फलतश्च प्रजा विष्णुरूपं परमपुरुषार्थं विस्मरन्ति| ते नेतारोऽन्धा एव तदनुयायिनश्चावश्यं दुर्व्यवस्थां नेष्यन्ते|

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन|

नरके नियतं वासो भवतीत्यनुशुश्रुम||४३||

उत्सन्न+कुल+धर्माणाम्— कुटुम्बसम्प्रदाया विनष्टा येषां तेषाम्; मनुष्याणाम्— नराणाम्; जनार्दन— हे कृष्ण; नरके— निरये; नियतम्— सदैव; वासः— वसतिः; भवति— वर्तते; इति— इत्थम्; अनुशुश्रुम— परम्परासकाशादहं श्रुतवान्|

हे जनार्दन! उत्सन्नकुलधर्माणां मनुष्याणां वासः सदैव नरके भवतीत्यहं परम्परासकाशादनुश्रुतवान्|

तात्पर्यम्— अर्जुनयुक्तिर्न स्वानुभवेऽपि तु प्रमाणतः श्रुतेऽवलम्ब्यते| अयमेव यथार्थज्ञानोपलब्धिमार्गः| यथार्थज्ञानपरिनिष्ठितोपयुक्तगुरुसाहाय्येन विना यथार्थज्ञानपदमुपलब्धुमशक्यमेव|

वर्णाश्रमधर्मनिर्दिष्टप्रायश्चित्तविधिं नित्यशः पापकर्मप्रवृत्तो मृत्योः पूर्वमाचरेन्नो चेदवश्यं पापफलरूपेण दुःखदजीवनानि भोक्तुं नरकलोकान् गमयिष्यते|

अहो बत महत् पापं कर्तुं व्यवसिता वयम्|

यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः||४४||

अहो बत— हा कियदाश्चर्यम्; महत्— बृहत्; पापम्— पातकम्; कर्तुम्— अनुष्ठातुम्; व्यवसिताः— निश्चिताः; वयम्— (पाण्डवाः); यत्— यतः; राज्यसुखलोभेन— राजकीयानन्दलौल्येन; हन्तुम्— मारयितुम्; स्वजनम्— स्वीयबन्धून्; उद्यताः— सन्नाः|

अहो बत वयं महत् पापं कर्तुं व्यवसिता यद्राज्यसुखलोभेन स्वजनं हन्तुमुद्यताः स्मः|

तात्पर्यम्— स्वार्थप्रेरितो भ्रातृपितृमातृवधादिपापप्रवणोऽपि स्यात्| विश्वेतिहासे नानोदाहरणाणि दृश्यन्ते| भगवत्साधुभक्तत्वादर्जुनः सदैव सदाचारविधिस्मरणेन प्रयत्नतः पापं परिहरति|

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः|

धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्||४५||

यदि— चेत्; माम्— (अर्जुनम्); अप्रतीकारम्— प्रतिरोधं न करोति यो माम्; अशस्त्रम्— आयुधरहितम्; शस्त्र+पाणयः— हस्तेषु शस्त्राणि येषां ते; धार्तराष्ट्राः— धृतराष्ट्रपुत्राः; रणे— युद्धभूमौ; हन्युः— मारयेयुः; तत्— अदः; मे— मम; क्षेमतरम्— श्रेयः; भवेत्— स्यात्|

यदि शस्त्रपाणयो धार्तराष्ट्रा रणेऽप्रतीकारमशस्त्रं मां हन्युस्तन्मम क्षेमतरं भवेत्|

तात्पर्यम्— शस्त्रहीनो युद्धविमुखश्च रिपुर्नैवाक्रमणीय इति रीतिः क्षत्रिययुद्धनियमानुसरेण| किन्तु विषमावस्थायामाक्रान्तोऽप्यहं न प्रतियोत्स्यामीत्यर्जुनस्य निश्चयः| विपक्षस्य युद्धप्रवणत्वप्रकारस्तेन न विचारितः| एतानि लक्षणानि तस्य भगवन्महाभक्तत्वेनोत्पन्नदयालुत्वादेव|

सञ्जय उवाच

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत्।

विसृज्य सशरं चापं शोकसंविग्नमानसः॥४६॥

सञ्जयः उवाच— सञ्जय आह; एवम्— इत्थम्; उक्त्वा— भाषित्वा; अर्जुनः— पार्थः; संख्ये— युद्धे; रथ+उपस्थे— स्यन्दनासने; उपाविशत्— आस्त; विसृज्य— त्यक्त्वा; सशरम्— बाणैः सहितम्; चापम्— धनुः; शोकसंविग्नमानसः— विलापेन सन्तप्तं मनो यस्य सः।

सञ्जय उवाच— युद्धभूमावेवमुक्त्वा शोकाभिभूतमना अर्जुनो धनुर्बाणांश्च विसृज्य रथासन उपाविशत्।

तात्पर्यम्— शत्रुव्यवस्थामवलोकमानोऽर्जुनो रथेऽतिष्ठत् परन्त्वेतावच्छोकाभिभूतत्वात् पार्श्वतो धनुर्बाणांश्च त्यक्त्वा पुनरुपाविशत्। एवंविधो दयालुः सुहृदयो भगवद्भक्तिमयसेवानिष्ठो नर आत्मज्ञानोपलब्धियोग्य एव।

इति श्रीमद्भगवद्गीतायां कुरुक्षेत्रयुद्धभूमिसैन्यनिरीक्षणनामके प्रथमाध्याये भक्तिवेदान्ततात्पर्याणि समाप्तानि।